१

कलं निःकलं शुद्धं निर्गुणं गुणसंस्थितं ॥८॥ हिरण्यतनुशंका संसूर्याय
तं समंप्रभुं ॥ मेघस्य मंचमं वीहं कुशलं कमले हृरां ॥९॥ जोतिरूपं मरूप
च सरूपं हृदि संस्थितं ॥ सर्वज्ञं सर्वरूपस्थं सर्वे सं सर्वतो मुखं ॥१०॥ ज्ञान कु
टस्थ म चलं ज्ञानं परमंप्रभु ॥ योगेशं येजे निष्टानां योगिनां योगरूपि
णं ॥११॥ ईश्वरं सर्वभुतानां सर्वभूतसमंप्रभुं ॥ इति नाम सतं दिव्यं वैष्ण
वं खलु पापहं ॥१२॥ व्यासेन कथितं पूर्वं सर्वपापप्रनासनं ॥ यपठेत प्रात
रुथाय संभवेत वैष्णवो नरः ॥१३॥ सर्वपापविशुधात्मा विष्णुसायोज्यमा
प्नुयात ॥ चंद्रायनिसहस्राणि कन्यादानसतानि च ॥१४॥ गवां लक्षस
हस्राणि मुक्तिभागी भवेन्नरः ॥ अस्वमेधायतं पुण्यं फलं प्राप्नोति मा
नव ॥१५॥ इति श्री विष्णुपुराणे विष्णु सतनामस्तोत्र संपूर्णं सुभमस्तु

श्रीमते रामानुजाय नमः ॥ वासुदेवं हृषीकेशं वामनं जलशा
यिनं । जनार्दनं हरिं कृष्णं श्रीवत्सांकं गरुडध्वजं ॥१॥ वाराहं
पुंडरीकाक्षं नृसिंहं नरकान्तकं । अव्यक्तं शाश्वतं वि
ष्णुमनन्तमजमव्ययं ॥२॥ नारायणं गदाध्यक्षं गोविंदं कि
र्तिभाजनं । गोवर्द्धनं धरं देवं भूधरं भुवनेश्वरं ॥३॥ वेत्तारं यज्ञपुरुषं यज्ञे
शं यज्ञवाहनं । चक्रपाणिं गदापाणिं शंखपाणिं नरोत्तमं ॥४॥ वैकुंठं दु
ष्टदमनं भूगर्भं पीतवाससं । त्रिविक्रमं त्रिकालज्ञं त्रिमूर्त्तिं नंदकेश्वरं
॥५॥ रामं रामं हयग्रीवं भीमं रौद्रं भवोद्भवं । श्रीपतिं श्रीधरं श्रीशं मंगलं
मंगलायुधं ॥६॥ दामोदरं दमोपेतं केशवं केशिसूदनं । वरेण्यं वरध
रं विष्णुमानंदं वसुदेवसुं ॥७॥ हिरण्यरेतसं दीप्तं पुराणं पुरुषोत्तमं ॥ स